द०क० ॐ अंतरिक्षायस्वाहा इदमंतरिक्षाय० ॐ वायवेस्वाहा इदंवायवे० ॐ ब्रह्मणेस्वा प०
। २९ ॥ हा इदंब्रह्मणे० ॐ छंदोभ्यःस्वाहा इदंछंदोभ्यः० एताःसामान्याहुतयः ॐ प्रजा
पतयेस्वाहा इदंप्रजापतये० इतिमनसा ॐ देवेभ्यःस्वाहा इदंदेवेभ्यः० ॐ ऋ
षिभ्यःस्वाहा इदंऋषिभ्यः० ॐ श्रद्धायैस्वाहा इदंश्रद्धायै० ॐ मेधायैस्वाहा इदं
मेधायै० ॐ सदसस्पतयेस्वाहा इदंसदसस्पतये० ॐअनुमतयेस्वाहा इदमनुमत
ये० ततोन्वारब्धकर्तृकोहोमः तत्तदाहुत्यनंतरंस्रुवावस्थितहुतशेषघृतस्यप्रोक्षणी
पात्रेप्रक्षेपः ॐ भूःस्वाहा इदमग्नये० ॐ भुवःस्वाहा इदंवायवे० ॐ स्वःस्वाहा इ
दंसूर्याय० एतामहाव्याहृतयः ॐ त्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासि
सीष्ठाः यजिष्ठोवन्हितमःशोशुचानोविश्वाद्वेषा २ सिप्रमुमुग्ध्यस्मत्स्वाहा इदम ॥ २९॥

ॐ इति प्रणवांतं पठित्वा पांक्तिं नमस्कारं च कारयित्वा ॐ समिधाग्निं दुवस्यत घृतैर्बोध
यतातिथिम्। आस्मिन् हव्या जुहोतन सुसमिद्धाय शोचिषे इति कंडिकांतरं वा फक्किकां
वा पाठयेत् ततः सप्रणवं स्वास्ति वाचयित्वा उत्थाय फलपुष्पसमन्वित ब्रह्मचारिदक्षिण
कररुपृष्ठेन घृतपूर्णेन पूर्णाहुतिं दद्यात् ॐ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ
जातमग्निं कविंस्सम्राजमतिथिं जनानामासन्नापात्रं जनयंत देवाः स्वाहा इति पूर्णाहु
तिः ततउपविश्य स्रुवेण भस्मानीय दक्षिणानामिकाग्रगृहीतभस्मना त्र्यायुषं जमदग्ने
रिति ललाटे ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायां ॐ यद्देवेषु त्र्यायुषं इति दक्षिणबाहुमूले
ॐ तन्नो अस्तु त्र्यायुषमिति हृदि अनेनैव क्रमेण ब्रह्मचारिललाटादावपि तत्र तत्त्इति
विशेषः इति वेदारंभः॥ अथ समावर्तनं॥ तत्र शुभेदिने प्रह्वीभूय आचार्यं स्नास्यामीति कु

संस्रवप्राशनम् ततआचम्य ॐ अद्यकृतैतद्वेदारंभहोमकर्मणिकृताकृतावेक्षणरूपब्र
ह्मकर्मप्रतिष्ठार्थं इदंपूर्णपात्रंप्रजापतिदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायब्रह्म
णेदक्षिणांतुभ्यमहंसंप्रददे इतिदक्षिणांदद्यात् ॐ स्वस्तीतिप्रतिवचनं ततोब्रह्मग्रं
थिविमोकः ॐ सुमित्रियानआपओषधयःसंतु इतिपवित्राभ्यांप्रणीताजलमानीय
तेनाशिरःसंमृज्य ॐ दुर्मित्रियास्तस्मैसंतु योस्मान्द्वेष्टियंचवयंद्विष्मःइतिमंत्रेणऐ
शान्यांप्रणीतान्युब्जीकुर्य्यात् ततःस्तरणक्रमेणबर्हिरानीयघृतेनाभिघार्य हस्तेनै
वजुहुयात् ॐ देवागातुविदोगातुंवित्वागातुमितमनसस्पतइमंदेवयज्ञ ꣳस्वाहाꣳवा
तेधाःस्वाहा इतिबर्हिर्होमः ततःकाश्मीरगमनम् ततइष्टांशकेवेदारंभंगुरुः कारयेत्
तत्रक्रमः ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि धियोयोनःप्रचोदयात्

कृत्वावारिणापरिपूर्यंकुशैराच्छाद्यब्रह्मणोमुखमवलोक्याऽग्नेरुत्तरतः कुशोपरिनिद
ध्यात् ततःपरिस्तरणं वर्हिषश्चतुर्थभागमादायाग्नेयादीशान्यंतंब्रह्मणोग्निपर्य्यंतं नै
र्ऋत्याद्वायव्यांतं अग्नितःप्रणीतापर्य्यंतं ततोग्नेरुत्तरतःपश्चिमदिशिपवित्रच्छेदना
र्थंकुशत्रयम् पवित्रकरणार्थंसाग्रमनंतर्गर्भंकुशपत्रद्वयं प्रोक्षणीपात्रंआज्यस्थाली
संमार्ज्जनार्थंकुशाः उपयमनकुशाःसमिधस्तिस्त्रःस्रुवआज्यंपूर्वपूर्वदिशिक्रमेणासा
दनीयं ततःपवित्रच्छेदनकुशैःपवित्रेछित्वासपवित्रकरेणप्रणीतोदकंत्रिःप्रोक्षणीपात्रे
निधायानामिकांगुष्ठाभ्यांपवित्रेगृहीत्वात्रिरुत्पूय प्रोक्षणीपात्रंवामकरेणादायाऽना
मिकांगुष्ठगृहीतपवित्राभ्यांतज्जलंकिंचित्रिःप्रक्षिप्य प्रणीतोदकेनप्रोक्षणीमभ्युक्ष्य
प्रोक्षणीजलेनयथासादितवस्तून्यभिषिच्याग्निप्रणीतयोर्मध्येप्रोक्षणीपात्रंनिदध्या

मारआचार्यंभाषतेतत्रस्नाहीत्याचार्य ःततोब्रह्मचारिणिआचार्य्येसन्निहितदक्षिणादि
शिउपाविष्टेकृतस्नानादिराचार्यःकुशैर्हस्तमात्रांभूमिंपरिसमुह्यतानैशान्यांपरित्यज्य
गोमयोदकेनोपलिप्य स्रुवमूलेनोत्तरोत्तरक्रमेणात्रिरुल्लिख्यउल्लेखनक्रमेणोद्धृत्यज
लेनाभ्युक्ष्यकांस्येनाग्निमानीयप्रत्यङ्मुखंनिदध्यात् ततःपुष्पचंदनतांबूलवासांस्या
दाय ॐअद्यामुकस्यकर्त्तव्यसमावर्तनहोमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मकर्तुम
मुकगोत्रममुकशर्म्माणंब्राह्मणमेभिःपुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेनत्वामहंवृणे वृ
तोस्मीतिप्रतिवचनं यथाविहितंकर्मकुर्वित्यभिधाय ॐ करवाणीतितेनोक्तेअग्नेर्दक्षि
णतः शुद्धमासनंदत्त्वातदुपरिप्रागग्रान्कुशानास्तीर्यास्मिन्कर्मणित्वंमेब्रह्माभवेत्य
भिधाय ॐ भवानीतितेनोक्ते ब्राह्मणमुदङ्मुखंतत्रोपवेश्य ततःप्रणीतापात्रंपुरतः

पतयेस्वाहा इदंप्रजापतये० इतिमनसा ॐ इंद्रायस्वाहा इदमिंद्राय० इत्याघारौ
ॐ अग्नयेस्वाहा इदमग्नये० ॐ सोमायस्वाहा इदंसोमाय० इत्याज्यभागौ ततो
ऽनन्वारब्धकर्तृकहोमः ॐ अंतरिक्षायस्वाहा इदमंतरिक्षाय० ॐ वायवेस्वाहा इ
दंवायवे० ॐ ब्रह्मणेस्वाहा इदंब्रह्मणे० ॐ छंदोभ्यःस्वाहा इदंछंदोभ्यः० ॐ प्रजा
पतयेस्वाहा इदंप्रजापतये० इतिमनसा ॐदेवेभ्यःस्वाहा इदंदेवेभ्यः० ॐऋषिभ्यः
स्वाहाइदंऋषिभ्यः० ॐश्रद्धायैस्वाहा इदंश्रद्धायै० ॐमेधायैस्वाहा इदंमेधायै०ॐ
सदसस्पतयेस्वाहा इदंसदसस्पतये० ॐअनुमतयेस्वाहा इदमनुमतये० ततोब्रह्म
णान्वारब्धोजुहुयात् अत्राहुतिदशतयेतत्तदाहुत्यनंतरंस्रुवावस्थिताज्यस्यप्रोक्षणी
पात्रेप्रक्षेपः ॐ भूःस्वाहा इदमग्नये० ॐ भुवःस्वाहा इदंवायवे० ॐ स्वःस्वाहा

त् ततआज्यस्थाल्यामाज्यनिर्वापः अधिश्रयणं ततस्तृणंप्रज्वाल्याज्यस्याग्नेश्चो
परिप्रदक्षिणंभ्रामयित्वावन्हौतत्प्रक्षिप्य स्रुवंत्रिःप्रतप्यसंमार्जनकुशानामग्रैरंतर
तोमूलैर्बाह्यतःस्रुवंसंमृज्य प्रणीतोदकेनाभ्युक्ष्यपुनःप्रतप्यस्रुवस्यदक्षिणतोनिदध्या
त् ततआज्यमाग्निंप्रदक्षिणंभ्रामयित्वाऽवतार्य्यत्रिःप्रोक्षणीवदुत्पूयावेक्ष्यसत्यपद्रव्ये
तन्निरसनंकृत्वापुनःपूर्ववत्प्रोक्षण्युत्पवनं ततउत्थायोपयमनकुशान्वामहस्तेकृत्वाप्र
जापतिंमनसाध्यात्वा तूष्णीमग्नौघृताक्ताःसमिधास्तिस्रःक्षिपेत् ततउपविश्यसप
वित्रप्रोक्षण्युदकेनप्रदक्षिणक्रमेणाग्निंपर्य्युक्ष्य प्रणीतापात्रेपवित्रेनिधाय पातितद
क्षिणजानुःसमिद्धतमेऽग्नौ ब्रह्मणान्वारब्धः स्रुवेणाज्याहुतीर्जुहुयात् तत्रप्रथमाहु
तिचतुष्टये प्रत्याहुत्यनंतरंस्रुवावस्थितहुतशेषघृतस्यप्रोक्षणीपात्रेप्रक्षेपः ॐ प्रजा

तम् ॐ प्रजापतयेस्वाहा इदंप्रजापतये० इतिमनसा इतिप्राजापत्यम् ॐ अग्नये
स्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृते०इतिस्विष्टकृत् ततःसंस्रवप्राशनं ततआचम्य
ॐ अद्य कृतैतत्समावर्तनहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदंपूर्ण
पात्रंप्रजापतिदैवतममुकगोत्रायामुकशर्म्मणेब्राह्मणायब्रह्मणेदक्षिणांतुभ्यमहंसंप्र
ददे इतिदक्षिणांदद्यात् ॐस्वस्तीतिप्रतिवचनम् ततोब्रह्मग्रंथिविमोकः ततःपवित्रा
भ्यांप्रणीताजलेन ॐ सुमित्रियानआपओषधयस्संतु इतिमंत्रेणाशिरःसंमृज्य
ॐ दुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मः इतिमंत्रेणैशान्यांप्रणीतान्यु
ब्जीकरणम् ततस्तरणक्रमेणबर्हिरानीयघृतेनाभिघार्यहस्तेनैवजुहुयात् ॐ देवा
गातुविदोगातुंवित्वागातुमितमनसस्पतइमंदेवयज्ञꣳस्वाहाꣳवातेधाःस्वाहा इति

द०क० इदंसूर्याय० एतामहाव्याहृतयः ॐ त्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासि पद्ध०
।२२॥ सीष्ठाः यजिष्ठोवन्हितमः शोशुचानोविश्वाद्वेषा२सिप्रमुमुग्ध्यस्मत्स्वाहा इदमग्नी
वरुणाभ्यां० ॐ सत्वन्नोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ अवयक्ष्वनोवरु
ण२ रराणोव्वीहिमृडीक२ सुहवोनएधिस्वाहा इदमग्नीवरुणाभ्यां० ॐ अयाश्चा
ग्नेस्यनभिशस्तिपाश्चसत्वमित्वमयाआसि अयानोयज्ञंवहास्ययानोधेहिभेषज२
स्वाहा इदमग्नये० ॐयेतेशतंवरुणयेसहस्त्रंयज्ञियाः पाशावितताममहांतः तेभिर्नोअ
द्यसवितोत्तविष्णुर्विश्वेमुंचंतुमरुतःस्वर्काःस्वाहा इदंवरुणायसवित्रेविष्णवेविश्वेभ्यो
देवेभ्योमरुद्भ्यःस्वर्केभ्यश्च० ॐउदुत्तमंवरुणपाशमस्मदवाधमंविमध्यम२श्रथाय अ
थावयमादित्यव्रतेतवानागसोअदितयेस्यामस्वाहा इदंवरुणाय० इतिसर्वप्रायश्चि ॥२२॥

शुष्कनिषिद्धेतरैंधनेनजुहुयात् ॐ अग्नेसुश्रवःसुश्रवसंमाकुरु ॐ यथात्वमग्नेसुश्र
वःसुश्रवाअसि ॐ एवंमांसुश्रवःसौश्रवसंकुरु ॐ यथात्वमग्नेदेवानांयज्ञस्यनिधि
पाअसि ॐ एवमहंमनुष्याणांवेदस्यनिधिपोभूयासं ततः प्रदक्षिणमग्निंवारिणापं
र्युक्ष्य तूष्णींपाणीप्रतप्यमुखंप्रतिमंत्रांतेवमृशति ॐ तनूपाअग्नेसितन्वंमेपाहि ॐ
आयुर्दाअग्नेस्यायुर्मेदेहि ॐ वर्च्चोदाअग्नेसिवर्चोमेदेहि ॐ अग्नेयन्मेतन्वाऊनंतम
आपृण ॐ मेधांमेदेवःसविताआदधातु ॐ मेधांमेदेवीसरस्वतीआदधातु ॐ मे
धांम्अश्विनौदेवावाधत्तांपुष्करस्त्रजौ तत्रसर्वगात्रादिषुदक्षिणपाणिनास्पर्शः तत्र
प्रत्येकंमंत्रः ॐ अंगानिचमआप्यायताम् इतिसर्वगात्रालंभने ॐ वाक्चमआप्या
यतामितिमुखालंभने ॐ प्राणश्चमआप्यायतामितिनासिकयोः ॐ चक्षुश्चमआ

।३४॥ बर्हिर्होमः ततोब्रह्मणान्वारब्धकर्त्तृकंकर्म्म ततोग्निपश्चिमोपविष्टोब्रह्मचारी परि
समूहनंकुर्यात् तत्रघृताक्तशुष्कानिषिद्धेतरेंधनेनपंचाहुतीर्हस्तेनैवजुहुयात् ॐ अग्ने
सुश्रवःसुश्रवसंमाकुरु ॐ यथात्वमग्नेसुश्रवःसुश्रवाअसि ॐ एवंमांसुश्रवःसौश्रव
संकुरुॐयथात्वमग्नेदेवानांयज्ञस्यानिधिपाअसि ॐएवमहंमनुष्याणांवेदस्यनिधिपो
भूयासम् ततःप्रदक्षिणमग्निंवारिणापर्युक्ष्य उत्थायघृताक्तांप्रादेशमितसमिधमादा
यजुहुयात् तत्रमंत्रः ॐअग्नयेसमिधमाहार्षंबृहतेजातवेदसे यथात्वमग्नेसमिधासमि
ध्यसएवमहमायुषामेधयावर्चसाप्रजयापशुभिर्ब्रह्मवर्चसेनसमिंधेजीवपुत्रोममा
चार्योमेधाव्यहमसान्यनिराकरिष्णुर्यशस्वीतेजस्वीब्रह्मवर्चस्व्यन्नादोभूयासंस्वाहा
ततःसमिदंतरद्वयमनेनैवक्रमेणप्रत्येकंहुत्वा उपविश्यतेनैवक्रमेणपंचाहुतीर्घृताक्त ॥३४॥

प्रागग्रेषुकुशेषु स्थित्वा एकस्मादाम्रपल्लवेनोदकंगृहीत्वा ॐ येप्स्वंतरग्नयःप्रविष्टा
गोह्य उपगाह्योमयूषोमनोहास्खलो विरुजस्तनूषेदुषुरिंद्रियहातान्विजहामियोरो
चनस्तामिहगृण्हामि इतिमंत्रेण ॥ ततस्तेनमामाभिषिंचामिश्रियैयशसेब्रह्मणे ब्र
ह्मवर्चसाय इत्यात्मानमाभिषिंचति ततोद्वितीयघटस्थमुदकंगृण्हाति ॐ येप्स्वंतर
ग्नय॰ इतिमंत्रेणगृहीत्वाम्रपल्लवेनाभिषिंचति ॐ येनश्रियमकृणुतांयेनावमृश्यता
ं सुरां येनाक्ष्यावभ्यषिंचतांयद्वातदश्विनायशः इतिमंत्रेण ततस्तेनैवक्रमेण पुनःये
प्स्वंतरग्नय॰इत्यनेनतृतीयकलशस्थजलमादाय ॐआपोहिष्ठामयोभुवस्तानऊर्जे
दधातन महेरणायचक्षसेइतिमंत्रेणाभिषिच्य तेनैवक्रमेण येप्स्वंतरग्नयइतिमंत्रेण
चतुर्थकलशस्थजलमादायॐयोवःशिवतमोरसस्तस्यभाजयतेहनः उशतीरिवमा

प्यायतामितिचक्षुर्द्वयस्पर्शः ॐश्रोत्रंचमआप्यायतामितिश्रोत्रद्वयस्पर्शः ॐ यशो
बलंचमआप्यायतामितिमंत्रपाठमात्रं ततोदक्षिणानामिकाग्रगृहीतभस्मनालला
टे ग्रीवायांदक्षिणबाहुमूलेहृदिचत्र्यायुषंकुर्यात् यथासंख्येनमंत्रचतुष्टयं ॐ त्र्यायुषं
जमदग्नेरितिललाटे ॐकश्यपस्यत्र्यायुषं इतिग्रीवायाम् ॐ यद्देवेषुत्र्यायुषंइतिद
क्षिणबाहुमूले ॐ तन्नोअस्तुत्र्यायुषंइतिहृदि ततोऽव्यस्तपाणिभ्यांपृथिवींस्पृशन् प्र
थमंवैश्वानरंसंबोध्याभिवादयेत् तत्रामुकगोत्रोऽहममुकप्रवरोऽहममुकशर्माहंभोवैश्वा
नरत्वामभिवादयेइतिप्रकारः ततस्तथैववरुणंसंबोध्याभिवादयेत् तथैवाचार्यंचाभि
वादयेत् ततः आयुष्मान्भवसौम्यइत्याचार्योब्रूयात् ततोऽग्नेरुत्तरतः प्रागग्रान्कुशा
नास्तीर्य तदुपरिदक्षिणोत्तरक्रमेणासादितवारिपूर्णकलशाष्टतये कलशानांपुरतः ॥३९॥

जभृष्णुरिंद्रोमरुद्भिरस्थात्सायंयावभिरस्थात्सहस्त्रसानिरासिसहस्त्रसानिंमाकुर्वाविं
द्न्मागमय इतिमंत्रेण ततोदधितिलान्वाप्राश्याचम्यजटालोमनखादींश्छेदयित्वा
स्नात्वाचम्य प्रादेशमितोदुंबरकाष्ठेनदंतधावनं ओमन्नाद्यायव्यूहध्व २ सोमोराजा
यमागमत् समेमुखंप्रमाक्ष्यतेयशसाचभगेनच इतिमंत्रेण ततोदंतकाष्ठंपरित्यज्या
चम्यसुगंधिद्रव्येणोद्वर्तनानंतरंस्नात्वाद्विराचम्यचंदनकुंकुमादिनानासिकायामुख
स्यालंभनेॐप्राणापानौमेतर्प्पयॐचक्षुर्मेतर्प्पयॐश्रोत्रंमेतर्पय इतिमंत्रेणानुलिंप
ति ततःपाणीप्रक्षाल्यदक्षिणाभिमुखः पातितवामजानुःकृतापसव्योद्विगणभुग्नकुश
त्रयतिलजलान्यादायआस्तृतकुशत्रयोपरिपितॄंस्तर्पयेत्ॐपितरःशुंधध्वमितिमंत्रे
ण ततःसव्यंकृत्वाआचम्यानुलिंप्यजपेत्ॐसुचक्षाअहमक्षीभ्यांभूयास२सुवर्चामुखे

तरः इतिमंत्रेणाभिषिच्य पुनःपंचमकलशस्थंजलं येप्स्वंतरग्नयइतिमंत्रेणतथैवा
दायॐ तस्माअरंगमामवोयस्यक्षयायजिन्वथ आपोजनयथाचनःइतिमंत्रेणाभिषि
च्य ततोवशिष्टकलशात्रितयजलंतथैव येप्स्वंतरग्नयइतिमंत्रेणप्रत्येकंगृहीत्वातूष्णीं
प्रत्येकमभिषिंचाति ततोमेखलामोचनंशिरोभागेन ॐ उदुत्तमंवरुणपाशमस्मद
वाधमंविमध्यम श्रथाय अथावयमादित्यव्रतेतवानागसोअदितयेस्याम इति मंत्रे
ण॥ दंडकृष्णाजिनेतूष्णींभूमौनिधाय अन्यद्वस्त्रंपरिधायोत्तरीयंचकृत्वाचम्य बद्धां
जलिरादित्यमुपतिष्ठेत् ब्रह्मचारीॐ उद्यन्भ्राजभृष्णुरिंद्रोमरुद्भिरस्थात् प्रातर्याव
भिरस्थात्दशसनिरसिदशसनिंमाकुर्वाविदन्मागमयोद्यन्भ्राजभृष्णुरिंद्रोमरु
द्भिरस्थाद्दादिवायावाभिरस्थाच्छतसानिरासिशतसनिंमाकुर्वाविदन्मागमयोद्यन्भ्रा ॥ ३६ ॥

यद्यशोप्सरसामिंद्रश्चकाराविपुलंपृथु तेनसंग्रथिताःसुमनसआबध्नामियशोमयि इ
तिमंत्रेणपुष्पमालापरिधानम् अथवसुप्रतिष्ठा अथोष्णीषेणशिरोवेष्टनं ॐ युवासु
वासाःपरिवीतआगात्सउश्रेयान्भवातिजायमानः तंधीरासःकवयउन्नयंतिस्वाध्यो
मनसादेवयंतः इतिमंत्रेण ततः कुंडलेपरिदधाति ॐ अलंकरणमसिभूयोलंकर
णंभूयात् ततोंजनम् ॐ वृत्रस्यासिकनीनकश्चक्षुर्दाआसिचक्षुर्म्मेदेहि ततआदर्शे
आत्मदर्शनम् ॐ रोचिष्णुरसिइतिमंत्रेण ततश्छत्रग्रहणं ॐ बृहस्पतेश्छदिरासिपा
प्मनोमामंतर्धेहि तेजसोयशसोमामंतर्धेहि इतिमंत्रेण ततः पद्भ्यामुपानहौप्रतिगृ
ह्णाति ॐ प्रतिष्ठेस्थोविश्वतोमापातम् इतिमंत्रेण ततोवैणवदंडधारणम् ॐ वि
श्वाभ्योमानाष्ट्राभ्यस्परिपाहिसर्वतः इतिमंत्रेण ततः स्नातकस्यनियमाः गानवा

नसुश्रुतूकर्णाभ्यांभूयासम् इति ततोऽहतवासःपरिधानम् ॐ परिधास्यैयशोधास्यै
दीर्घायुत्वायजरदष्टिरस्मिशतंचजीवामिशरदः पुरूचीरायस्पोषमभिसंव्ययिष्ये इ
तिमंत्रेण ततोतज्ञोपवीतपरिधानम् ॐ यज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुर
स्तात् आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजः इतिमंत्रेण द्वितीयग्रहण
म् यज्ञोपवीतमितिप्रजापतिर्ऋषिर्यजुरुपवीतदेवतायज्ञोपवीतपरिधानेविनियोगः
यज्ञोपवीतमसियज्ञस्यत्वायज्ञोपवीतेनोपनह्यामि आचमनं अथोत्तरीयं ॐयशसा
माद्यावापृथिवीयशसेंद्राबृहस्पती यशोभगश्चमाविदद्यशोमाप्रतिपद्यताम् इतिमंत्रे
णततःपुष्पमालाग्रहणेमंत्रः ॐया आहरज्जमदग्निः श्रद्धायैकामायेंद्रियायताअहंप्रति
गृण्हामियशसाचभगेनच इतिमंत्रेणपुष्पमालाग्रहणम् ततःपुष्पमालापरिधानम्ॐ

षमितिग्रीवायाम् ॐ यद्देवेषुत्र्यायुषमितिदक्षिणबाहुमूले ॐ तन्नोअस्तुत्र्यायुषमि तिहृदि इतित्र्यायुषंकुर्यात् अनेनैवक्रमेणकुमारललाटादावपि तत्रतन्नोइत्यस्य स्थानेतत्तेइतिविशेषः ततोमूर्द्धाक्षतादिग्रहणम् ॥ ॥ इतिश्रीमहामत्तकमहासामं ताधिपतिश्रीरामदत्तविरचिता वाजसनेयिनामुपनयनकर्मपद्धतिःसमाप्ता॥ ॥

॥ अथ सामग्री ॥ ॥ रोली १२ मौली ७ केसर २५ बतासे ३ अष्टाचावल पुष्प १२ पुष्पमाला धूप ३ दीप १ तांबूल ७ यज्ञोपवीत ९ प्रणीतापात्र ३ प्रोक्षणीपात्र ३ कांस्यपात्र ६ छायापात्र १ सुवर्ण १ कुशा १ स्रुवा १ गोम य एरणेगोहे पलाशसमिधा सेर ३ पूर्णपात्र ३ उपर्णे ५ धोंतिया ५।२ कुपी नी ५ मृगचर्म १ पलाशदण्ड १ गुलरशाखा १ मेखलामुंजीकी १ सुहालीया

दित्रनृत्यत्यागः नतत्रगमनंक्षेमेसतिनरात्रौग्रामांतरगमनं नधावेत् नकूपेऽवेक्षणंन वृक्षारोहणं फलत्रोटनं अमार्गेणनगच्छेत् नग्नोनस्नायात् नसंधिशयनम् नाविषम भूमिलंघनं अश्लीलंनोपवदेत् उदितास्तसमयेसूर्यंनोपपश्येत् जलमध्येसूर्यंआका शस्थंनपश्येत् देवेवर्षतिनगच्छेत् उदकेआत्मानंनपश्येत् अजातलोम्नींप्रमत्तांपुरु षाकृतिंषंढांचनगच्छेदित्यादि ततआचार्य्यायवरांदक्षिणांदद्यात् ततः मूर्द्धानंदिवो अरतिंपृथिव्यावैश्वानरमृतआजातमग्निं कवि २ सम्राजमतिथिंजनानामासन्नापा त्रंजनयंतदेवाः स्वाहा इतिमंत्रेण फलपुष्पसमन्वितघृतपूर्णस्रुवेणमाणवकदक्षिण करस्पृष्टेनउत्थायपूर्णाहुतिमाचार्य्यःकुर्य्यादिति ततउपविश्य स्रुवेणभस्मानीय द क्षिणानामिकाग्रगृहीतभस्मना ॐ त्र्यायुषंजमदग्नेरितिललाटे ॐ कश्यपस्यत्र्यायु

मातृपूजाभ्युदायिकेकृत्वा अर्हणवेलायांमंडपेप्रत्यङ्मुखः प्राङ्मुखंवरमूर्ध्वजानुंतिष्ठं
तंसंबोध्य ततःस्वस्तिवाचनंकलशगणेशादीनांपूजनंचकृत्वाॐ साधुभवानास्तामि
तिप्रजापतिर्ऋषिर्ब्रह्मादेवतायजुर्वरार्चनेविनियोगः ॐ साधुभवानास्तामर्चयिष्या
मोभवंतमितिब्रूयात् ॐ अर्चयेतिवरेणोक्तेवरोपवेशनार्थेशुद्धमासनंदत्त्वा विष्टरमा
दाय ॐ विष्टरोविष्टरोविष्टरइत्यन्येनोक्ते ॐ विष्टरःप्रतिगृह्यतामितिदातावदेत्
ॐ विष्टरंप्रतिगृण्हामिइत्यभिधायवरोविष्टरंगृहीत्वा ॐ वर्ष्मोस्मीत्याथर्वणऋषि
र्विष्टरोदेवतानुष्टुप्छंदःउपवेशनेविनियोगः ॐ वर्ष्मोस्मिसमानानामुद्यतामिवसू
र्य्यः इमंतमभितिष्ठामियोमाकश्चाभिदासतिइत्यनेनासनेउत्तराग्रविष्टरेपरिवरउ
पविशति तत्रउपविश्ययजमानःपाद्यमंजलिनादाय ॐ पाद्यंपाद्यंपाद्यमित्यन्येनो

सेर १ पुरवा ८ लोटिया ८ नारियेल २ खडावाजोडा १ पट्टी १ चगेर १ लाठी ५ गुथली १ कसारु २ ॥ घृत ॥ तिल ३ दधि १ सुपारि ११ आम्रपल्लव वृक्षादेपत्र ७ अंजन १ दर्पण १ वसु ५ मोती उपानहौ वटणश्वेत दूर्वा दोने १० अबीरश्वेत ६ ब्राह्मणभोजन दक्षिणा पंचरंग २५ ॥ इतिसामग्री समाप्ता ॥

॥श्रीगणेशायनमः॥अथविवाहः॥तत्रकन्याहस्तेनषोडशहस्तमितंमंडपंतद्दक्षिणादिशिपश्चिमांदिशमाश्रित्य मंडपसंलग्नमुत्तराभिमुखंकौतुकागारंमंडपाद्बहिरीशान्यां दिशिजामातृचतुर्हस्तपरिमितासिकतादिपरिष्कृततुषकेशशर्करादिरहितांरम्यां वेणुनिर्मितांवेदिंचकारयेत् विवाहदिनेकृतनित्यक्रियेणजामात्रापित्रामातृपूजापूर्वकमाभ्युदयिकश्राद्धंकर्तव्यम् कन्यापितास्नातः शुचिः शुक्लांबरधरः कृतनित्यक्रियो

त्पयः इत्यर्घपात्रस्थंजलमैशान्यांदिशित्यजन्पठति ततआचमनीयमादाय ॐ आ
चमनीयमाचमनीयमाचमनीयमित्यन्येनोक्ते ॐ आचमनीय प्रतिगृह्यतामितिदा
तावदेत् ततोवरः ॐआचमनीयंप्रतिगृण्हामीत्याभिधाययजमानहस्तादाचमनीय
मादाय ॐ आमागन्यशसासꣳसृजवर्चसा तंमाकुरुप्रियंप्रजानामधिपतिंपशूनाम
रिष्टिंतनूनांइत्यनेनसकृदाचामेत् इतिद्विस्तूष्णीं। ततोयजमानः कांस्यपात्रस्थदधि
मधुघृतानिकांस्यपात्रपिहितान्यादायॐमधुपर्को मधुपर्को मधुपर्कः इत्यन्येनोक्तेॐ
मधुपर्कःप्रतिगृह्यतामितिदातावदेत्ॐमधुपर्कंप्रतिगृण्हामिइतिवरोवदेत् ॐमित्र
स्यत्वाचक्षुषाप्रतीक्षे इतियजमानकरस्थमेवनिरीक्ष्यॐदेवस्यत्वासवितुःप्रसवेऽश्विनो
र्बाहुभ्यांपूष्णोहस्ताभ्यांप्रतिगृण्हामीत्यनेनमधुपर्कंगृहीत्वा वामहस्तेकृत्वा ॐ नमः

क्ते ॐ पाद्यंप्रतिगृह्यतामितिदातावदेत् ॐ पाद्यंप्रतिगृण्हामि इत्यभिधाययजमा
नांजलितोंजलिनापाद्यमादायवरः विराजोदोहोसीतिप्रजापतिर्ऋषिरापोदेवताय
जुःपादप्रक्षालनेजलग्रहणेविनियोगः ॐ विराजोदोहोसिविराजोदोहमशयिमाद्धि
पद्यायैविराजोदोहः इतिदक्षिणपादंप्रक्षालयाति अनेनैवक्रमेणाननैवमंत्रेणप्रक्षा
लनम् ततःपूर्ववद्विष्टरांतरंगृहीत्वाचरणयोरधस्तात् उत्तराग्रंवरःकुर्यात् ततोदूर्वाक्ष
तफलपुष्पचंदनयुतार्घपात्रंगृहीत्वायजमानः ॐ अर्घोअर्घोअर्घः इत्यन्येनोक्ते ॐ
अर्घः प्रतिगृह्यतामितिदातावदेत् ॐअर्घंप्रतिगृण्हामीत्यभिधाययजमानहस्ताद
र्घंगृहीत्वा ॐ आपस्थयुष्माभिः सर्वान्कामानवाप्नुवानीतिशिरस्यक्षतादिकंकिंचि
दत्वा ॐ समुद्रंवःप्रहिणोमिस्वांयोनिमभिगच्छत अरिष्टास्माकंवीरामापरासेचिम

सूना ऽस्वसादित्यानाममृतस्यनाभिः प्रनुवोचंचिकितुषेजनायमागामनागामदितिं
वधिष्ठ ममचामुष्यपाप्माहतः ॐउत्सृजततृणान्यन्वितितृणं छिंद्यात्ततोवेदिकायांतु
षकेशशर्करादिरहितायांहस्तमात्रपरिमितायांचतुरस्त्रांभूमिंकुशैः परिसमुह्यतान्कु
शानैशान्यांपरित्यज्यगोमयोदकेनोपलिप्यस्फ्येनस्त्रुवेणवाप्रागग्रप्रादेशमात्रमुत्त
रोत्तरक्रमेणत्रिरुल्लिख्यउल्लेखनक्रमेणानामिकांगुष्ठाभ्यामुपांशुउद्धृत्यजलेनाभ्युक्ष्य
तत्रतूष्णींकांस्यपात्रस्थंवन्हिंअग्निकोणादानीयप्रत्यङ्मुखमुपसमाधाय तद्रक्षार्थंकिं
चिन्नियुज्यकौतुकागाराद्वरःकन्यामानीयमंडपेउपविश्य ॐ जरांगच्छपरिधत्स्ववा
सोभवाकृष्टीनामाभिशास्तिपावा शतंजीवामशरदःसुवर्चारयिंचपुत्राननुसंव्ययस्वायु
ष्मतीदंपरिधत्स्ववासःइतिपठित्वापरिधानवस्त्रंतस्यैददातिवरःततः ॐयाअकृतन्न

द०क० ऽयावास्यायान्नशनेयत्तआविद्धंतत्तोनिष्कृंतामीत्यनामिकयांगुष्ठेनचत्रिःप्रदक्षिणमा
।४२।। लोड्य अनामिकांगुष्ठाभ्यांभूमौकिंचिन्निक्षिपेत् पुनस्तथैवद्विःप्रत्येकंक्षिपेत् ततोव पद्ध०
रःॐयन्मधुनइतिकुत्सऋषिर्मधुपर्कोदेवताजगतीछंदोमधुपर्कप्राशनेविनियोगःॐ
यन्मधुनोमधव्यंपरमꣳ रूपमन्नाद्यंतेनाहंमधुनोमधव्येनपरमेणरूपेणान्नाद्येनपर
मोमधव्योन्नादोमानि इत्यनेनवारत्रयंमधुपर्कप्राशनम् प्रतिप्राशनेचैतन्मंत्रपाठः
ततोमधुपर्कशेषमसंचरदेशेधारयेत् ततोद्विराचम्यॐवाङ्मआस्यस्तुॐनसोर्मेप्रा
णोस्तुॐ अक्ष्णोर्मेचक्षुरस्तुॐकर्णयोर्मेश्रोत्रमस्तुॐबाह्वोर्मेबलमस्तुॐ ऊर्वोर्मेओ
जोस्तु ॐअरिष्टानिमेंगानितनूस्तन्वामेसहसंतु इत्यास्यादिप्रत्येकंसर्वंगात्राणिस्पृ
ष्ट्वाॐगौर्गौर्गौरित्यनेनाभिहितेयजमानेनप्रत्युक्ते ततोवरःॐमातारुद्राणांदुहिताव

जलान्यादाय जामातृदक्षिणकरोपरिकन्यादक्षिणकरंनिधाय ॐ दाताहंवरुणोरा
जाद्रव्यमादित्यदैवतं वरोसौविष्णुरूपेणप्रतिगृण्हात्वयंविधिःइतिपठित्वा गोत्रोच्चा
रणंकुर्यात् ॐ अद्यामुकमासीयामुकपक्षीयामुकतिथौअमुकवासरेअमुकगोत्रस्यामु
कप्रवरस्यामुकशर्म्मणः प्रपौत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पौत्राय
अमुकगोत्रस्यामुकप्रवरस्यामुकशमर्णः पुत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकश
र्मणः प्रपौत्रीम् अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पौत्रीम् अमुकगोत्रस्यामुक
प्रवरस्यामुकशर्मणःपुत्रीम्इत्यनेनक्रमेणत्रिरावर्त्यपठनीयम् अमुकगोत्राय अमुक
प्रवराय अमुकशर्म्मणेवराय अमुकगोत्रांअमुकप्रवरांअमुकनाम्नीं इमांकन्यांसालं
कारां प्रजापतिदैवत्यांस्वर्गकामःपत्नीत्वेनतुभ्यमहंसंप्रददे ॐ स्वस्तीतिप्रतिवचन

वयंयाअतन्वतायाश्चदेवीस्तंतूनाभितोततंथ तास्त्वादेवीर्जरसेसंव्ययस्वायुष्मतीदं परिधत्स्ववासः इतिपठित्वोत्तरीयंददाति ततोवरः ॐपरिधास्यैयशोधास्यैदीर्घायुत्वा यजरदष्टिरस्मि शतंचजीवामिशरदःपुरूचीरायस्पोषमभिसंव्ययिष्ये इतिपठित्वा अधोवस्त्रंवरःपरिधत्ते ॐ यशसामाद्यावापृथिवीयशसेंद्राबृहस्पती यशोभगश्चमा विदद्यशोमाप्रतिपद्यताम् इतिपठित्वोत्तरीयंपरिदधातिवरः ततोवरस्यकन्यायाश्च द्विराचमनं ततःकन्याप्रदेनपरस्परंसमंजेथां इतिप्रैषणंकन्यावरयोः परस्परमभि मुखीकरणं ॐ समंजंतुविश्वेदेवाःसमापोहृदयानिनौ संमातरिश्वासंधातासमुदेष्ट्री दधातुनौइतिवरःपठति ततःकन्याप्रदकर्तृकंग्रंथिबंधनम् बंधनंकन्यावरयोः अथह स्तलेपनं शाखोच्चारणम् ॥ अथकन्यादानम् ॥ दाताशंखस्थदूर्वाक्षतफलपुष्पचंदन

शंचतुष्पदे सोमःप्रथमोविविदेगंधर्वोविविदउत्तरः तृतीयोग्निष्टेपतिस्तुरीयस्तेमनु
ष्यजाः सोमोददद्गंधर्वायगंधर्वोददद्ग्नये रयिंचपुत्रांश्चादादाग्निर्मह्यमथोइमां सा
नःपूषाशिवतमामेरयसानऊरूउशतीविहर यस्यामुशंतःप्रहरामशेपंयस्यामुकामा
बहवोनिविष्ट्यै ४ इतिवरपठितमंत्रांतेपरस्परंनिरीक्षणं ततोग्निंप्रदक्षिणीकृत्य प
श्चादग्नेरहतवस्त्रवेष्टिततृणपुलकेकटेवातदुपरिदक्षिणंचरणंदत्त्वा वधूंदक्षिणतःकृत्वा
तामुपवेश्यस्वयमुपविश्यवरः पुष्पचंदनतांबूलवस्त्राण्यादाय ॐ अद्यकर्तव्यविवा
हहोमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मकर्त्तुममुकगोत्रममुकशर्माणंब्राह्मणमेभिः
पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेनहोतृत्वेनचत्वामहंवृणे इतिब्राह्मणंवृणुयात् ॐ वृ
तास्मीतिप्रतिवचनम् यथाविहितंकर्मकुरुइतिवरेणोक्ते ॐ करवाणीतिब्राह्मणोवदे

म् ॐ द्यौस्त्वाददातुपृथिवीत्वाप्रतिगृह्णातु इतिवरःपठेत् ततःकन्याप्रदः ॐ अद्यकृतै
तत्कन्यादानप्रतिष्ठार्थंइदंसुवर्णमग्निदैवतं अमुकगोत्राय अमुकप्रवराय अमुकश
र्मणेवरायदक्षिणांतुभ्यमहंसंप्रददे इतिदक्षिणांदद्यात् ॐस्वस्तीतिप्रतिवचनम् गो
मिथुनंवादद्यात् ॐ कोदात्कस्माअदात्कामोदात्कामायादात् कामोदाताकामःप्रति
ग्रहीताकामैतत्ते इतिवरःपठेत् ततस्तांपाणौगृहीत्वा ॐ यदैषिमनसादूरंदिशोनुप
वमानोवाहिरण्यपर्णोवैकर्णःसत्वामन्मनसांकरोतु श्रीअमुकदेविइतिपठान्निष्क्राम
ति ततोवेदिदक्षिणस्यांदिशिवारिपूर्णंदृढकलशंउर्ध्वंतिष्ठतोमौनिनःपुरुषस्यस्कंधे
अभिषेकपर्यंतंधारयेत् ततःपरस्परंसमीक्षेथां इतिकन्याप्रदप्रैषानंतरं ॐ अघोर
चक्षुरपतिघ्न्येधिशिवापशुभ्यःसुमानाःसुवर्चाः वीरसूर्देवकामास्योनाशंनोभवद्विपदे

ज्यंषट्पंचाशदुत्तरमुष्टिशतद्वयावच्छिन्नतंडुलपूर्णपात्रंपवित्रछेदनकुशानांपूर्वपूर्वादि
शिक्रमेणासादनीयं अथतस्यामेवदिशिअसाधारणवस्तून्युपकल्पनीयानितत्रशमी
पालाशमिश्राः लाजाः दृषदुपलं कुमारीभ्राताशूर्पंदृढपुरुषःअन्यदपितदुपयुक्तमा
लेपनादिद्रव्यं ततःपवित्रछेदनकुशैःपवित्रेछित्वा ततःसपवित्रकरेणप्रणीतोदकंत्रिः
प्रोक्षणीपात्रेनिधायअनामिकांगुष्ठाभ्यांउत्तराग्रेपवित्रेगृहीत्वात्रिरुत्पवनं ततःप्रोक्ष
णीपात्रस्यसव्यहस्तेकरणंअनामिकांगुष्ठाभ्यांपवित्रेगृहीत्वा त्रिरुद्दिंगनंप्रणीतोद
केनप्रोक्षणीजलेनयथासादितवस्तुसेचनंततोग्निप्रणीतयोर्मध्येप्रोक्षणीपात्रनिधान
म् आज्यस्थाल्यामाज्यनिर्वापः ततोधिश्रयणं ततोज्वलत्तृणादिनाहविर्वेष्टयित्वा
प्रदक्षिणक्रमेणवन्हौतत्प्रक्षेपः पर्यग्निकरणं ततःस्रुवप्रतपनंकृत्वासम्मार्जनकुशाना

त् ततोऽग्नेर्दक्षिणतः शुद्धमासनं दत्त्वा तदुपरि प्रागग्रान्कुशानास्तीर्य ब्रह्माणमग्निप्रद
क्षिणक्रमेणानीयात्र त्वं मे ब्रह्मा भवेत्याभिधाय कल्पितासने उपवेशयेत् ॐ अद्य कर्तव्य
विवाहकर्म्मणि कृताकृतावेक्षणरूपाचार्यकर्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमे
भिः पुष्पचंदनतांबूलवासोभिः आचार्यत्वेन त्वामहं वृणे ॐ वृतोऽस्मीति प्रतिवचनं त
तः प्रणीतापात्रं पुरतः कृत्वा वारिणा पूर्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्य अग्नेरुत्त
रतः कुशोपरि निदध्यात् ततः परिस्तरणं बर्हिषश्चतुर्थभागमादाय आग्नेयादीशानांतं
ब्रह्मणोऽग्निपर्यंतं नैर्ऋत्याद्वायव्यंतम् अग्नितः प्रणीतापर्यंतं ततोऽग्नेरुत्तरतः पश्चिमादि
शि पवित्रच्छेदनार्थं कुशत्रयं पवित्रकरणार्थं साग्रमनंतर्गर्भं कुशपत्रद्वयं प्रोक्षणीपात्रं आ
ज्यस्थालीसम्मार्जनार्थं कुशत्रयं उपयमनार्थं वेणीरूपकुशत्रयं सामिधस्तिस्रः स्रुव आ ॥४४॥

हा इदमग्नये० ॐ भुवः स्वाहा इदंवायवे० ॐ स्वः स्वाहा इदंसूर्याय० एतामहा
व्याहृतयः त्वन्नोअग्नेइतिवामदेवऋषिरग्नीवरुणौदेवतेत्रिष्टुप्छंदोहोमेविनियो० ॐ
त्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः यजिष्ठोवन्हितमःशोशुचानो
विश्वाद्वेषा॰सिप्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यां० ॐ सत्वन्नोअग्नेवमोभ
वोतीनेदिष्ठोअस्याउषसोव्युष्टौ अवयक्ष्वनोवरुण॰रराणोव्वीहिमृडीक॰सुहृ
वोनएधि स्वाहा इदमग्नीवरुणाभ्यां० अयाश्चाग्नेइतिवामदेवऋषिराग्निर्देवतात्रि
ष्टुप्छंदः सर्वप्रायश्चित्तहोमेविनियोगः ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्वमित्व
मयाअसि अयानोयज्ञंवहास्ययानोधेहिभेषज॰स्वाहा इदमग्नये० ॐ येतेशतं
वरुणयेसहस्रंयज्ञियाःपाशावितताममहांतः तेभिर्नोअद्यसवितोत्तविष्णुर्विश्वेमुंचंतु

 

॥४५॥

मग्नेरंतरतोमूलैर्वाह्यतः स्रुवंसंमृज्यप्रणीतोदकेनअभ्युक्ष्यपुनःप्रतप्यस्रुवंदाक्षिणतो
निदध्यात् ततआज्यस्याग्नेरवतारणंततआज्येप्रोक्षणीवदुत्पवनम् अवेक्ष्यसत्यप
द्रव्येतान्निरसनं पुनःप्रोक्षण्युत्पवनं ततःउपयमनकुशानादायउत्तिष्ठन्प्रजापतिंमन
साध्यात्वा तूष्णीमग्नौघृताक्तास्तिस्रःसमिधःक्षिपेत् ततउपविश्यसपवित्रप्रोक्षण्युद
केनप्रदक्षिणक्रमेणाग्निपर्युक्षणंकृत्वाप्रणीतापात्रेपवित्रेनिधायपातितदक्षिणजानुः
कुशेनब्रह्मणान्वारब्धःसमिद्धतमेग्नौस्रुवेणाज्याहुतीर्जुहोति तत्राघारादारभ्यद्वाद
शाहुतिषुतत्तदाहुत्यनंतरंस्रुवावस्थितहुतशेषघृतस्यप्रोक्षणीपात्रेप्रक्षेपःॐप्रजापत
येस्वाहा इदंप्रजापतये०इतिमनसा ॐ इंद्रायस्वाहा इदमिंद्राय० इत्याघारौ ॐ
अग्नयेस्वाहा इदमग्न० ॐ सोमायस्वाहा इदंसोमाय० इत्याज्यभागौ ॐ भूःस्वा ॥ ४९ ॥

सामासूर्योगंधर्वस्तस्यमरीचयोप्सरसआयुवोनामताभ्यःस्वाहा इदंमरीचिभ्योप्स
रोभ्य आयुभ्यो० ४ ॐ सुषुम्णः सूर्यरश्मिश्चंद्रमागंधर्वःसनइदंब्रह्मक्षत्रंपातुतस्मै
स्वाहावाट् इदंसुषुम्णायसूर्यरश्मयेचंद्रमसेगंधर्वाय० ५ ॐ सुषुम्णःसूर्यरश्मि
श्चंद्रमागंधर्वस्तस्यनक्षत्राण्यप्सरसोभेकुरयोनामताभ्यः स्वाहा इदंनक्षत्रेभ्योप्स
रोभ्योभेकुरीभ्यो० ६ ॐ इषिरोविश्वव्यचावातोगंधर्वःसनइदंब्रह्मक्षत्रंपातुतस्मै
स्वाहावाट् इदमिषिरायविश्वव्यचसेवातायगंधर्वाय० ७ ॐ इषिरोविश्वव्यचावा
तोगंधर्वस्तस्यापोप्सरसऊर्जोनामताभ्यःस्वाहाइदमद्भ्योऽप्सरोभ्यऊर्ग्भ्यो० ८
ॐ भुज्युःसुपर्णोयज्ञोगंधर्वःसनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा वाट् इदंभुज्यवेसुपर्णा
ययज्ञायगंधर्वाय० ९ ॐ भुज्युःसुपर्णोयज्ञोगंधर्वस्तस्यदक्षिणाअप्सरसस्तावान

॥४६॥

मरुतःस्वर्काःस्वाहा इदंवरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यश्च० ॐ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यम २ श्रथाय अथाऽवयमादित्यव्रतेतवानागसोअदितयेस्यामस्वाहा इदंवरुणाय० एताः प्रायश्चित्तसंज्ञकाः ततोन्वारब्धंविना ॐ प्रजापतयेस्वाहा इदंप्रजापतये० ॐ अग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृते० ॐ उदकोपस्पर्शनम् ॥ अथराष्ट्रभृतः ॐ ऋताषाडृतधामाग्निर्गंधर्वःसनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा वाट् इदमृतासाहेऋतधाम्नेग्नयेगंधर्वाय० १ ॐ ऋताषाडृतधामाग्निर्गंधर्वस्तस्यौषधयोप्सरसोमुदोनामताभ्यः स्वाहा इदमोषधीभ्योप्सरोभ्योमुद्भ्यो० २ ॐ स २ हितोविश्वसामासूर्य्योगंधर्वः सनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट् इदंस २ हितायविश्वसाम्नेसूर्यायगंधर्वाय० ३ ॐ स २ हितोविश्व

य० ॐ प्रजापतिर्जयानिंद्रायवृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मैविशः समनमंतुस र्वाः स उग्रः स इ हव्यो बभूवस्वाहा इदंप्रजापतयेजयानिंद्राय० इतिजयाहोमः उद कोपस्पर्शनम् ॥ अथाभ्यातहोमः ॐ अग्निर्भूतानामधिपतिःसमावत्वस्मिन्ब्रह्मण्य स्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मण्यस्यांदेवहूत्या २ स्वाहा इदमग्न येभूतानामधिपतये० ॐ इंद्रो ज्येष्ठानामधिपतिःसमावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्या माशिष्यस्यांपुरोधायामस्मिन्कर्मण्यस्यांदेवहूत्या २ स्वाहा इदमिंद्रायज्येष्ठानाम धिपतये० ॐ यमः पृथिव्या अधिपतिःसमावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्य स्यांपुरोधायामस्मिन्कर्मण्यस्यांदेवहूत्या २ स्वाहा इदंयमायपृथिव्याअधिपत ये० अत्रप्रणीतोदकस्पर्शः ॐ वायुरंतरिक्षस्याधिपतिःसमावत्वस्मिन्ब्रह्मण्यस्मि

मताभ्यःस्वाहा इदंदक्षिणाभ्योऽप्सरोभ्यस्तवाभ्यो० १० ॐ प्रजापतिर्विश्वकर्मा 
 मनोगंधर्वःसनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा वाट् इदंप्रजापतयेविश्वकर्मणेमनसेगं
धर्वाय० ११ ॐ प्रजापतिर्विश्वकर्मामनोगंधर्वस्तस्यऋक्सामान्यप्सरसएष्टयोना
मताभ्यःस्वाहाइदमृक्सामभ्योप्सरोभ्यएष्टिभ्यो० १२ इतिराष्ट्रभृतः ॥ अथजया
होमः ॐ चित्तंचस्वाहा इदंचित्ताय० ॐ चित्तिश्चस्वाहा इदंचित्त्यै० ॐ आकूतंच
स्वाहा इदमाकूताय० ॐ आकूतिश्चस्वाहा इदमाकूत्यै० ॐ विज्ञातंचस्वाहा इदं
विज्ञाताय० ॐविज्ञातिश्चस्वाहा इदंविज्ञात्यै० ॐ मनश्चस्वाहा इदंमनसे० ॐ
शक्करीश्चस्वाहा इदंशक्करीभ्यो० ॐ दर्शश्चस्वाहा इदंदर्शाय० ॐपौर्णमासंचस्वा
हा इदंपौर्णमासाय० ॐ बृहच्चस्वाहा इदंबृहते० ॐ रथंतरंचस्वाहा इदंरथंतरा 

वरुणोपामधिपतिःसमावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायाम
स्मिन्कर्म्मण्यस्यांदेवहूत्याऽस्वाहा इदंवरुणायापामधिपतये० ॐ समुद्रःस्रोत्या
नामधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामास्मिन्
कर्म्मण्यस्यांदेवहूत्याऽस्वाहा इदंसमुद्रायस्रोत्यानामधिपतये० ॐ अन्न ऽ साम्रा
ज्यानामधिपतिःसमावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामास्मि
न्कर्मण्यस्यांदेवहूत्याऽस्वाहाइदमन्नायसाम्राज्यानामधिपतये० ॐ सोमओष
धीनामधिपतिःसमावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामास्मि
न्कर्म्मण्यस्यांदेवहूत्या ऽ स्वाहा इदंसोमायौषधीनामधिपतये० ॐ सविताप्रसवा
नामधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामास्मिन्

द०क० | नृक्षत्रेस्यामाशिष्यस्यांपुरोधायामास्मिनूकर्मण्यस्यांदेवहूत्या २ स्वाहा इदंवायवे | प्र५०
।४८॥ ऽतरिक्षस्याधिपतये० ॐ सूर्योदिवोधिपतिःसमावलास्मिनूब्रह्मण्यास्मिनूक्षत्रेस्या
माशिष्यस्यांपुरोधायामास्मिन्कर्मण्यस्यांदेवहूत्या २ स्वाहा इदंसूर्यायदिवोधिपत
ये० ॐ चंद्रमानक्षत्राणामधिपतिः समावलास्मिनूब्रह्मण्यस्मिनूक्षत्रेस्यामाशिष्य
स्यांपुरोधायामस्मिनूकर्म्मण्यस्यांदेवहूत्या २ स्वाहा इदंचंद्रमसेनक्षत्राणामधिप
तये० ॐ बृहस्पतिर्ब्रह्मणोधिपतिः समावलास्मिनूब्रह्मण्यस्मिनूक्षत्रेस्यामाशिष्य
स्यांपुरोधायामस्मिनूकर्म्मण्यस्यांदेवहूत्या २ स्वाहा इदंबृहस्पतयेब्रह्मणोधिपत
ये० ॐ मित्रःसत्यानामाधिपतिःसमावलास्मिनूब्रह्मण्यास्मिनूक्षत्रेस्यामाशिष्यस्यां
पुरोधायामस्मिनूकर्मण्यस्यांदेवहूत्या २ स्वाहा इदंमित्रायसत्यानामधिपतये० ॐ ॥४८॥

तामहाइहमावन्त्वास्मिन्ब्रह्मण्यास्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्म
ण्यस्यांदेवहूत्या२स्वाहा इदंपितृभ्यःपितामहेभ्यःपरेभ्योवरेभ्यस्ततेभ्यस्ततामहे
भ्यो॰ अत्रप्रणीतोदकोपस्पर्शनम् इत्याभ्यातानानामकम् ॐ अग्निरैतुप्रथमोदेव
ताना२ सोस्यैप्रजांमुंचतुमृत्युपाशात् तदय २ राजावरुणोनुमन्यतांयथेय २ स्त्री
पौत्रमघन्नरोदात्स्वाहा इदमग्नये॰ ॐ इमामग्निस्त्रायतांगार्हपत्यःप्रजामस्यैनयतु
दीर्घमायुः अशून्योपस्थाजीवतामस्तुमातापौत्रमानंदमभिविबुध्यतामिय२स्वाहा
इदमग्नये॰ॐस्वस्तिनोअग्नेदिवापृथिव्याविश्वानिधेह्ययथायजत्र यदस्यांमहिदि
विजातंप्रशस्तंतदस्मासुद्राविणंधेहिचित्र२स्वाहा इदमग्नये॰ ॐ सुगंनुपंथांप्रवि
शन्नएहिज्योतिष्मद्धेह्यजरन्नआयुः अपैतुमृत्युरमृतंमआगाद्वैवस्वतोनोअभयंकृ

॥४९॥ कर्म्मण्यस्यांदेवहूत्या ३ स्वाहा इदंसवित्रेप्रसवानामाधिपतये० ॐ रुद्रःपशूनाम
धिपतिः समावत्वास्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामास्मिन्कर्म्म
ण्यस्यांदेवहूत्या३स्वाहा इदंरुद्रायपशूनामाधिपतये०अत्रप्रणीतोदकस्पर्शः ॐत्वष्टा
रूपाणामधिपतिः समावत्वास्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मि
न्कर्म्मण्यस्यांदेवहूत्या३स्वाहा इदंत्वष्ट्रेरूपाणामाधिपतये०ॐविष्णुःपर्वतानामधि
पतिःसमावत्वास्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामास्मिन्कर्म्मण्य
स्यांदेवहूत्या३स्वाहा इदंविष्णवेपर्वतानामधिपतये०ॐमरुतोगणानामधिपतय
स्तेमावन्त्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मण्यस्यांदे
वहूत्या३स्वाहा इदंमरुद्भ्योगणानामाधिपतिभ्यो०ॐपितरःपितामहाःपरेवरेततास्त ॥४९॥

वननंतदाग्निरनुमन्यतामिय २ स्वाहा इदमग्नये० ततोवरोवधूदाक्षिणहस्तंसांगुष्ठं
गृण्हाति ॐ गृभ्णामितेसौभगत्वायहस्तंमयापत्याजरदाष्टिर्यथासः भगोअर्यमासवि
तापुरंधिर्म्मह्यंत्वादुर्गार्हपत्यायदेवाः अमोहमस्मिसात्व२सात्वमस्यमोअहंसामा
हमस्मिऋग्त्वंद्यौरहंपृथिवीत्वंतावेहिविवहावहै सहरेतोदधावहै प्रजांप्रजनयाव
है पुत्रान्विंदावहै बहूंस्तेसंतुजरदष्टयः संप्रियौरोचिष्णूसुमनस्यमानौ पश्येम
शरदःशतं जीवेमशरदः शत २ शृणुयामशरदःशतमितिमंत्रेण अथवधूमग्नेरुत्तर
तःप्राङ्मुखःपूर्वोपकल्पितंदृषदुपलंदाक्षिणपादेनारोहयतिवरः ॐ आरोहेममश्मा
नमश्मेवत्व २ स्थिराभव अभितिष्ठपृतन्यतोववाधस्वपृतनायतः इतिमंत्रेणआ
रूढायामेवतस्यांवरोगाथांगायति ॐ सरस्वतीप्रेदमवसुभगेवाजिनीवती यांत्वा

णोतुस्वाहा इदंवैवस्वताय० अत्रप्रणीतोदकस्पर्शनम् ततअंतःपटं ॐ परंमृत्यो
अनुपरेहिपंथांयस्तेअन्यइतरोदेवयानात् चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजाः री
रिषोमोतवीरान्स्वाहा इदंमृत्यवे० अत्रप्रणीतोदकोपस्पर्शनम् ततोवधूमग्रतःकृ
त्वा वरोवधूश्चद्वावपिप्राङ्मुखौस्थितौभवतः ततोवरांजलिपुटोपरिसंलग्नवध्वंजलि
स्थघृताभिघारितवधूभ्रातृदत्तशमीपालाशमिश्रैर्लाजैर्वधूकर्तृकोमंत्रपाठपूर्वकोहो
मः तत्रमंत्राःअर्यमणमित्याथर्वणऋषिरग्निर्देवतानुष्टुप्छंदोलाजहोमेविनियोगः ॐ
अर्यमणंदेवंकन्याअग्निमयक्षत सनोअर्यमादेवःप्रेतोमुंचतुमापतेःस्वाहा इदमर्य
म्णेदेवाय० ॐ इदंनार्युपब्रूतेलाजानावपंतिका आयुष्मानस्तुमेपतिरेधंतांज्ञातयो
ममस्वाहा इदमग्नये० ॐ इमांल्लाजानावपाम्यग्नौसमृद्धिकरणंतव ममतुभ्यंचसं

त्रप्रोक्षणीपात्रेहुतशेषाज्यप्रक्षेपः ततआलेपनेनोत्तरोत्तरकृतसप्तमंडलेषुसप्तपदाक्र
मणंवरःकारयन्वक्ष्यमाणमंत्रैः तत्रप्रथमेएकामिषेविष्णुस्त्वांनयतु द्वितीयेद्वेऊर्जेवि
ष्णुस्त्वांनयतुतृतीयेत्रीणिरायस्पोषायविष्णुस्त्वांनयतुचतुर्थेचत्त्वारिमायोभवायावि
ष्णुस्त्वांनयतु पंचमेपंचपशुभ्योविष्णुस्त्वांनयतु षष्ठेषड्ऋतुभ्योविष्णुस्त्वांनयतुसप्त
मेसखेसप्तपदाभवसामामनुव्रताभवविष्णुस्त्वांनयतुततोग्नेःपश्चादुपविश्यपुरुषस्य
स्कंधेस्थितकुंभादाम्रपल्लवेनजलमानीयतेनचवरोवधूमेनांमूर्द्धन्याभिषिंचातिॐआपः
शिवाः शिवतमाः शांताः शांततमास्तास्तेकृण्वंतुभेषजमितिपुनस्तथैवानीतजलेना
त्मानमभिषिंचति आपोहिष्ठामयोभुवस्तानऊर्जेदधातन महेरणायचक्षसे योवःशि
वतमोरसस्तस्यभाजयतेहनःउशतीरिवमातरःतस्माअरंगमामवोयस्यक्षयायाजि

 

॥८२॥ विश्वस्यभूतस्यप्रजायामस्याग्रतः यास्याभूत २ सम भवद्यस्यांविश्वमिदंजगत् ता
मद्यगाथांगास्यामियास्त्रीणामुत्तमंयशः ततोग्रेवधूःपश्चाद्वरः प्रणीताब्रह्मसहित
माग्निप्रदक्षिणंकुरुतः तत्रवरपठनीयोमंत्रः ॐ तुभ्यमग्नेपर्य्यवहन्सूर्य्यांवहतुनास
ह पुनःपतिभ्योजायांदाअग्नेप्रजयासह ततःपश्चादग्नेः स्थित्वा लाजहोमसांगुष्ठह
स्तग्रहणाश्मारोहणगाथागानाग्निप्रदक्षिणाःपुनरपितथैवएतेनैवलाजाहुतयःसांगु
ष्ठहस्तग्रहणत्रयम् गाथागानत्रयंप्रदक्षिणत्रयंसंपद्यते ततोवशिष्टलाजैः कन्याभ्रा
तृदत्तैरंजलिस्थशूर्पकोणेनवधूर्जुहोति ॐ भगायस्वाहा इदंभगाय० चतुर्थंभ्रमणंतू
ष्णींअग्रेवरःपश्चात्वधूःततस्तूष्णींपरिक्रमणम् ततोवरःउपविश्यब्रह्मणान्वारब्धः
आज्येनप्राजापत्यंजुहुयात् ॐ प्रजापतयेस्वाहा इदंप्रजापतये० इतिमनसा अ ॥८२॥

वोनिषीदं त्विहाश्वाइहपूरुषाः इहोसहस्त्रदक्षिणोयज्ञइहपूषानिषीदत्विति मंत्रेण अ
थास्विष्टकृद्धोमः ॐ अग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृते॰ स्रुवावशिष्टाज्यस्य
प्रोक्षणीपात्रेप्रक्षेपः अयंचहोमोब्रह्मणान्वारब्धकर्तृकः ततआचम्यसंस्रवप्राशन
म् अथाचम्य ॐ अद्यकृतैतद्विवाहहोमकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतम
मुकगोत्रायामुकशर्म्मणेब्राह्मणायदक्षिणांतुभ्यमहंसंप्रददे इति ब्रह्मणेदक्षिणां
दद्यात् स्वस्तीतिप्रतिवचनम् ॐ अद्यकृतैतद्विवाहहोमकर्म्मणिआचार्यकर्म्मप्रति
ष्ठार्थंइदंहिरण्यमग्निदैवतद्रव्यममुयथानामगोत्रायाऽमुकशर्म्मणेब्राह्मणायदक्षिणां तु
भ्यमहंसंप्रददे ततोब्रह्मग्रंथिविमोकः ॐ सुमित्रियानआपओषधयःसंतु इतिपवि
त्रंगृहीत्वा प्रणीताजलेनशिरःसंमृज्य ॐ दुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचव

न्वथ आपोजनयथाचनः इतितिसृभिः अथैनांसूर्यमुदीक्षस्वेतिॐतच्चक्षुरित्यनेनमं
त्रेणवधूःसूर्यंपश्यति अस्तमितेसूर्येध्रुवमुदीक्षस्वेतिपतिप्रेषानंतरंध्रुवंपश्यति तत्र
पठनीयोमंत्रः ॐ ध्रुवमसिध्रुवंत्वापश्यामिध्रुवैधिपोष्यामयिमह्यंत्वादात् बृहस्पति
र्मयापत्याप्रजावतीसंजीवशरदःशतमितिपृष्टासायंदिनंपश्यति तथापिपश्यामीति
ब्रूयात् ततोवरोवधूदक्षिणांसोपरिहस्तंनीत्वातस्याहृदयमालभेत् ममव्रतेतेहृदयंद
धामि ममचित्तमनुचित्तंतेअस्तु ममवाचमेकमनाजुषस्वप्रजापतिष्ट्वानियुनक्तुमह्य
मितिमंत्रेण अथैनामभिमंत्रयतिवरःॐसुमङ्गलीरियंवधूरिमाꣳसमेतपश्यत सौभा
ग्यमस्यैदत्वायाथास्तंविपरेतनइतिमंत्रेण अथवधूंबलवान्कश्चित्ब्राह्मणउत्थायप्रा
गुदग्वानुगुप्तागारेलोहितानडुहचर्मणिप्रतिलोमास्तीर्णेउपवेशयेत्वरोवाॐइहगा

पैःसिंदूरकरणंग्राम्यवचनंवरःकुर्यात् ग्राम्याः स्त्रियः अथवेदितोमंडपमागत्यदूर्वा
क्षतादिग्रहणंततस्त्रिरात्रमक्षारालवणाशिनौअधःशायिनौनिवृत्तमैथुनौभवतः प्राङ्
मुखौवधूवरौस्थितौभवतः॥ इतिविवाहकर्मपद्धतिःसमाप्ता ॥ ॥ ॥
अथचतुर्थीकर्म ॥ततश्चतुर्थ्यामपररात्रेचतुर्थीकर्म तच्चगृहाभ्यंतरएवकार्यम् ततःउ
द्वर्तनादिकृत्वा युगकाष्ठमुपविश्यस्नात्वाशुद्धवस्त्रंपरिधायगृहंप्रविश्यवधूवरौप्राङ्मु
खौभवतः ॐ गणपत्यादिदेवतापूजनं ततःकुशकंडिकारंभःतत्रक्रमःजामातृहस्त
परिमितांवेदिंकुशैःपरिसमुह्य तान्कुशानैशान्यांपरित्यज्य गोमयोदकेनोपालिप्य
स्फ्येनस्रुवेणवाप्रागग्रप्रादेशमात्रात्रिरुत्तरोत्तरक्रमेणोल्लिख्य उल्लेखनक्रमेणानामि
कांगुष्ठाभ्यांमृदमुद्धृत्य जलेनाभ्युक्ष्य तत्रतूष्णींकांस्यपात्रेणाग्निमानीय स्वाभिमु

यद्विष्मः इत्यैशान्यांप्रणीतांन्युब्जीकुर्यात् ततआस्तरणक्रमेणबर्हिरुत्थाप्याज्येना
भिघार्यहस्तेनैवबर्हिर्होमः तत्रमंत्रः ॐ देवागातुविदोगातुंवित्वागातुमितमनस
स्पतइमंदेवयज्ञ २ स्वाहा व्वातेधाः स्वाहा तत उत्थायवधूद्दक्षिणहस्तेनस्रुवस्पृ
ष्टघृतपुष्पफलैः पूर्णाहुतिः तत्रमंत्रः ॐ मूर्द्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआ
जातमग्निं कवि २ संम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः स्वाहा ततःस्रुवे
णभस्मानीयदक्षिणानामिकाग्रगृहीतभस्मना ॐ त्र्यायुषंजमदग्नेरितिललाटे ॐ
कश्यपस्यत्र्यायुषंइतिग्रीवायां ॐ यद्देवेषुत्र्यायुषंइतिदक्षिणांसे ॐ तन्नोअस्तुत्र्या
युषमितिहृदि एवंवध्वाअपिकुर्यात् तन्नोइत्यस्यस्थानेतत्तेइतिविशेषः ततआचारा
त् शणशंखशमीसुवर्णप्रेरितासिंदूरकरणंवरकर्तृकम् ततोऽन्यैरपिप्रतिष्ठितस्त्रीपुरु

ह्मणोक्षिपर्यंतं नैर्ऋत्याद्वायव्यांतं अग्नितःप्रणीतापर्यंतं ततोग्नेरुत्तरतः पश्चिमदि
शिपवित्रछेदनार्थंकुशत्रयंपवित्रकरणार्थंसाग्रमनंतर्गर्भकुशपत्रद्वयं प्रोक्षणीपात्रंआ
ज्यस्थालीसंमार्जनार्थं कुशत्रयं उपयमनार्थंवेणीरूपकुशत्रयं समिधस्तिस्त्रःस्त्रुवः
आज्यंषट्पंचाशदुत्तरवरमुष्टिशतद्वयावच्छिन्नामतंदुलपूर्णपात्रं एतानिपवित्रछेदन
कुशानांपूर्वपूर्वदिशि क्रमेणासादनीयानि ततःपवित्रछेदनकुशैःपवित्रेछित्त्वा प्रादेश
मितपवित्रकरणं ततःसपवित्रकरेणप्रणीतोदकांत्रिः प्रोक्षणीपात्रेनिधाय अनामिकां
गुष्ठाभ्यामुत्तराग्रेपवित्रेधृत्वात्रिरुत्पवनं ततःप्रोक्षणीपात्रस्यसव्यहस्तकरणं पवित्रे
गृहीत्वात्रिरुद्दिंगनं प्रणीतोदकेनप्रोक्षणीप्रोक्षणं ततःप्रोक्षणीजलेनयथासादितव
स्तुसेचनम् ततोग्निप्रणीतयोर्मध्येप्रोक्षणीपात्रंनिधाय आज्यस्थाल्यामाज्यानिर्वा

द०क० खंनिदध्यात् ततःपुष्पचंदनतांबूलवस्त्राण्यादाय ॐ अस्यांरात्रौकर्त्तव्यचतुर्थीहोम पद्ध०
॥५४॥ कर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मकर्त्तुंहोतृकर्म्मकर्तुममुकगोत्रममुकशर्माणंब्राह्म
णमेभिःपुष्पचंदनादिभिर्ब्रह्मत्वेनहोतृत्वेनचत्वामहंवृणेइतिब्राह्मणंवृणुयात् ॐ वृतो
स्मीतिप्रतिवचनम् यथाविहितंकर्म्मकुर्वितिवरेणोक्ते ॐ करवाणीतिब्राह्मणोवदेत्
ततोग्नेर्दक्षिणतःशुद्धमासनंदत्त्वा तदुपरिप्रागग्रान्कुशानास्तीर्य ब्राह्मणमग्निंप्रद
क्षिणक्रमेणानीय ॐ अत्रत्वंमेब्रह्माभवेत्यभिधाय ॐ भवानीतिब्राह्मणेनोक्तेकल्पि
तासनेउदङ्मुखंब्राह्मणमुपवेशयेत् ततःपृथूदकपात्रमग्नेरुत्तरतःप्रतिष्ठाप्य प्रणी
तापात्रंपुरतःकृत्वा वारिणापरिपूर्यकुशैराच्छाद्य ब्रह्मणोमुखमवलोक्याग्नेरुत्तरतः
कुशोपरिनिदध्यात् ततःपरिस्तरणंबर्हिषश्चतुर्थभागमादाय आग्नेयादीशानांतं ब्र ॥५४॥

इदमग्नये० ॐ सोमायस्वाहा इदंसोमाय० इत्याज्यभागौ ततआज्याहुतिपंचतये
स्थालीपाकाहुतौचप्रत्याहुत्यनंतरंस्रुवावस्थितहुतशेषघृतस्यप्रोक्षणीपात्रेप्रक्षेपः त
तोब्रह्मणान्वारब्धंविना ॐ अग्नयेप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्राह्मणस्त्वा
नाथकामउपधावामियास्यैपतिघ्नीतनूस्तामस्यैनाशयस्वाहा इदमग्नये० ॐ वायो
प्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामउपधावामियास्यैप्रजाघ्नी
तनूस्तामस्यैनाशयस्वाहा इदंवायवे० ॐ सूर्यप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसि
ब्राह्मणस्त्वानाथकामउपधावामियास्यैपशुघ्नीतनूस्तामस्यैनाशयस्वाहा इदंसूर्याय
न० ॐ चंद्रप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामउपधावामिया
स्यैगृहघ्नीतनूस्तामस्यैनाशयस्वाहा इदंचंद्राय० ॐ गंधर्वप्रायश्चित्तेत्वंदेवानांप्राय

दं०कं० पः ततोधिश्रयणं ततोज्वलत्तृणादिनाहविर्वेष्टयित्वा प्रदक्षिणक्रमेणपर्यग्निकरणं त पद्ध०
॥ ५५॥ तःस्रुवंप्रतप्यसंमार्जनकुशानामग्रैरंतरतोमूलैर्बाह्यतःस्रुवसंमार्जनं प्रणीतोदकेना
भ्युक्ष्य पुनःप्रतप्यस्रुवंदक्षिणतोनिदध्यात् ततःआज्यस्याग्नेरवतारणम् ततआ
ज्येप्रोक्षणीवदुत्पवनं अवेक्ष्यसत्यपद्रव्येतन्निरसनं पुनःपूर्ववत्प्रोक्षण्युत्पवनं उप
यमनकुशान्वामहस्तेनादाय उत्तिष्ठन्प्रजापतिंमनसाध्यात्वातूष्णीमग्नौघृताक्ताः
समिधस्तिस्रःक्षिपेत् ततःउपविश्यप्रोक्षणीजलेनाग्निंप्रदक्षिणंपर्युक्ष्यपवित्रंप्रोक्ष
णीपात्रेधृत्वा ब्रह्मणान्वारब्धःपातितदक्षिणजानुर्जुहुयात् तत्राघारादारभ्याहुतिच
तुष्टयेतत्तदाहुत्यनंतरंस्रुवावस्थिताज्यंप्रोक्षण्यांक्षिपेत् ॐ प्रजापतयेस्वाहा इदंप्र
जापतये० इतिमनसा ॐ इंद्रायस्वाहा इदमिंद्राय० इत्याघारौ ॐ अग्नयेस्वाहा ॥५५॥

ग्नीवरुणाभ्यां० ॐ अयाश्चाग्नेस्यनभिशास्तिपाश्चसत्वमित्वमयाअसि अयानोयज्ञं
वहास्ययानोधेहिभेषज २ स्वाहा इदमग्नये० ॐ येतेशतंवरुणयेसहस्त्रंयज्ञियाःपा
शाविततामहांतःतेभिर्न्नोअद्यसवितोत्तविष्णुर्व्विश्वेमुंचंतुमरुतःस्वर्काः स्वाहा इदंवरु
णायसवित्रेविष्णवेदेवेभ्योमरुद्भ्यः स्वर्केभ्यश्च० ॐ उदुत्तमंवरुणपाशमस्मदवाधमं
विमध्यम २ श्रथायअथावयमादित्यव्रतेतवानागसोअदितयेस्यामस्वा ०इदंवरुणायं
एताः प्रायश्चित्तसंज्ञकाः ॐ प्रजापतयेस्वाहा इदंप्रजापतये० इतिमनसा इदंप्राजा
पत्यं ततःसंस्त्रवप्राशनम् ततः आचम्यॐअस्यांरात्रौकृतैतच्चतुर्थीहोमकर्म्मणिकृता
कृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदंपूर्णपात्रं प्रजापतिदैवतम् अमुकगोत्रायाऽमु
कशर्मणेब्राह्मणायदक्षिणांतुभ्यमहंसंप्रददे इतिदक्षिणांदद्यात् स्वस्तीतिप्रतिवचन

॥५६॥

शिचत्तिरसिब्राह्मणस्त्वानाथकामउपधावामियास्यैयशोघ्नीतनूस्तामस्यैनाशयस्वाहा
इदंगंधर्वाय० चरुमाभिघार्य ततःस्थालीपाकेनजुहुयात्ॐ प्रजापतयेस्वाहाइदंप्रजा
पतये० इतिमनसा अग्न्याहुतिनवकेहुतशेषघृतस्यप्रोक्षणीपात्रेप्रक्षेपः अयंचहो
मोब्रह्मणान्वारब्धकर्तृकःततःआज्यस्थालीपाकाभ्यांस्विष्टकृद्धोमः ॐ अग्नयेस्विष्ट
कृतेस्वाहा इदमग्नयेस्विष्टकृते० ततआज्येन ॐ भूःस्वाहा इदमग्नये०ॐ भुवःस्वा
हा इदंवायवे० ॐस्वःस्वाहा इदंसूर्याय० एतामहाव्याहृतयः ॐत्वन्नोअग्नेवरुणस्य
विद्वान्देवस्यहेडोअवयासिसीष्ठाः यजिष्ठोवह्नितमः शोशुचानोविश्वाद्वेषांसिप्र
मुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यांन० ॐसत्वन्नोअग्नेवमोभवोतीनेदिष्ठोअस्या
उषसोव्युष्टौ अवयक्ष्वनोवरुण२रराणोवीहिमृडीक२सुहवोनएधिस्वाहा इदम

दिविचंद्रमसिश्रियं वेदाहंतन्मांताद्विद्यात् पश्येमशरदः शतं जीवेमशरदःशत ॅं शृ
णुयामशरदःशतमिति अथकङ्कणमोक्षणादीनियुतग्रंथिविमोकादीनिआचारप्राप्ता
नि कङ्कणंमोचयाम्यद्यरक्षांसिनकदाचन ॥ मयिरक्षांस्थिरांदत्वास्वस्थानंगच्छकंक
ण ॥ ततउत्थाय वधूदक्षिणहस्तस्पृष्टस्रुवेणघृतफलपुष्पपूर्णेनपूर्णाहुतिंकुर्यात्ॐ मू
र्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निं कवि ॅंसम्राजमतिथिंजनानामा
सन्नापात्रंजनयंतदेवाःस्वाहा इतिमंत्रेणपूर्णाहुतिःततःस्रुवेणभस्मानीय दक्षिणाना
मिकाग्रगृहीतभस्मना ॐ त्र्यायुषंजमदग्नेरितिललाटेॐकश्यपस्यत्र्यायुषमितिग्री
वायांॐयद्देषुत्र्यायुषंइतिदक्षिणबाहुमूले ॐतन्नोअस्तुत्र्यायुषंइतिहृदये एवंवध्वाअ
पित्र्यायुषंकुर्यात् तत्रतन्नोइत्यस्यस्थानेतचेइतिविशेषः ततआचार्यायदक्षिणांदद्या

 म्र ततोब्रह्मग्रंथिविमोकः ततः सुमित्रियानआपओषधयःसन्तु इतिपवित्राभ्यांशि 
 रः संमृज्य ॐ दुर्मित्रियास्तस्मैसन्तु योस्मान्द्वेष्टियंचवयंद्विष्मः इत्यैशान्यांदिशि
प्रणीतांन्युब्जीकुर्यात् ततस्तरणक्रमेणबर्हिरुत्थाप्यघृताक्तंहस्तेनैवजुहुयात् ॐ दे
वागातुविदोगातुंवित्वागातुमितमनसस्पतइमंदेवयज्ञꣳस्वाहावातेधाः स्वाहा आ
म्रपल्लवेनजलमानीयमूर्ध्निवरोवधूमभिषिंचति ॐ यातेपतिघ्नीप्रजाघ्नीपशुघ्नीगृह
घ्नीयशोघ्नीनिंदिता तनूर्जारघ्नीततएनांकरोमिसाजीर्यत्वंमयासह श्रीअमुकदेवी इ
तिमंत्रेण ततोवधूंस्थालीपाकंप्राशयतिवरः ॐ प्राणैस्तेप्राणान्संदधामि अस्थिभि
स्तेऽस्थीनिसंदधामिॐमांसैस्तेमांसानिसंदधामिॐत्वचातेत्वचंसंदधामि इतिमंत्र
चतुष्टयेनप्रतिमंत्रांतेन्नंप्राशयेत् ततोवधूहृदयंस्पृष्ट्वावरःपठेत् ॐ यत्तेसुशीमेहृदयं 

तू होत्रेचदक्षिणांदद्यात् भूयसींदद्यात् ॥ इतिचतुर्थीकर्मसमाप्तम् ॥ इतिदशक
र्मपद्धतिःसमाप्ता॥ ॥ ॥ ॥ ॥

